॥ श्रीः ॥

# ॥ ऋग्विधानम् ॥

श्रीमहर्षिशौनकप्रणीतम् ।

इदं किल
श्रीचिदंबरक्षेत्रविराजमानचतुःशास्त्रपारंगतराजसंमानित-
महामहोपाध्याय ब्रह्मश्री हरिहरशास्त्रिणां अन्तेवासिना
ए. यस्. वेङ्कटरमणशास्त्रिणा; श्रीराधामङ्गल-
ग्रामवास्तव्यवेदवेदांगतत्वज्ञ राजसंमानित-
बह्वृचसिंह ब्रह्मश्री रङ्गनाथघनपाठिनां
छात्रेण श्रीरामभद्रदीक्षितेन
च सुतरां परिष्कृतम् ॥



श्रीरङ्गस्थ
श्रीवाणीविलासमुद्रायन्त्रालये
संमुदितम् ॥
१९१४.

# ॥ विज्ञप्तिः ॥

कालापकर्षान्नृपविप्लवाद्वा निसर्गतो वावनतिं गतस्य ।
समुद्धृतौ भारतरत्नराशेः सतां विधेयः सततं प्रयत्नः ॥

अयि भोः पण्डितप्रकाण्डाः !

विदितमेव तत्रभवतां आस्तिकशिरोमणीनां यदिदानीं ऋग्वेदीयरहस्यप्रकाशकानि लक्षणग्रन्थान्यतिदुर्लभानीति । तानीमानि कथमपि प्राकाश्यं नेतव्यानीति बहूनां स्वत एव सद्व्यवसायतत्पराणां अभिज्ञानां अभिप्रायमनुसृत्य आवामप्यत्र प्रावृत्तिष्वहि । प्रवृत्ताभ्यां च आवाभ्यां तदर्थं तत इतो विचित्य केरळदेशे पुस्तकद्वयं संपादितं । यद्यपि ग्रन्थानां एषां अधुनावधि प्रचारवैरल्यात् पुस्तकेषु परस्परलेखविसंवादो हन्त भूयानेव, तथापि सर्वाणि च तानि यथामति समीकृत्य यावच्छक्ति शोधयित्वा च मुद्राणार्थमेतौ व्यन्ययूजाव । तदिह मानुष्यकसुलभात् प्रमादात् यत्र क्वचित् संभावितमपि स्खालित्यं श्रमविदः पण्डिताः क्षममाणाः स्वयमभिनन्दन्तः निर्व्याजमेव नौ प्रोत्साहकांश्च पुरुषधौरेयान् अनुगृह्णन्त्विति प्राञ्जली पण्डितकुलं प्रार्थयमानौ,

महामहोपाध्यायश्रीहरिहरशास्त्रिणां शिष्यः
ए. यस्. वेङ्कटरमणशास्त्री ;
बह्वृचसिंहानां श्रीरङ्गनाथघनपाठिनामन्तेवासी
टि. के रामभद्रदीक्षितश्च ।

# ॥ यन्त्रस्थानि ॥

## [IN THE PRESS.]

श्रीस्वर्णवल्लीस्तबकम्— २. ऋग्वेदसप्तलक्षणम् सव्याख्यं सोदाहरणं सस्वरम् ।

" ३. व्याळिशिक्षा जटोदाहरणमिति प्रसिद्धं कठिनसन्धिरहस्यान्यपि सन्ति ।

" ४. सर्वानुक्रमणीवृत्तिः षड्गुरुशिष्यकृत वेदार्थदीपिकाख्यव्याख्यया संभूषिता ; छन्दोरहस्यं छन्दोमञ्जरीत्येतावपि स्तः ।

" ५. ऋग्वेदरहस्यम् अत्यद्भुतमिदं ग्रन्थरत्नं अस्मिन् ऋग्वेदविषयाणि सर्वाण्यपि सन्ति ।

" ६. पाणिनिहृदयम् पाणिनीयशिक्षायाः अत्यद्भुतव्याख्यानं ; बहूनि लक्षणविषयाणि विस्तृतानि सन्ति ; वैदिकसार्वभौमानां वैयाकरणपण्डितानां च अत्यावश्यकमेतत् ।

" ७. स्वरशिरोमणिः स्वरलक्षणं सोदाहरणं अतिदुर्लभमेतत् ।

पत्रादिप्रेषणस्थानम्

टि. के रामभद्रदीक्षितः ।

श्रीस्वर्णवल्लीविलासम् ।

KaliarKoil P. O.

*Ramnad Dt.*





॥ श्रीः ॥

# ॥ ऋग्विधानम् ॥

---

निष्कृतिर्नहिवेदानां मंत्राणां कलिदोषतः ।
कलिदोषनिवृत्त्यर्थं गायत्रीमाश्रयेद्द्विजः ॥

गायत्रीमंत्रसिद्ध्यर्थं गायत्रीं त्र्ययुतं जपेत् ।
सर्वेषांवेदमंत्राणां सिध्यर्थं लक्षकं जपेत् ॥

गायत्रीं न्यासपूर्वां च सप्तव्याहृतिसंपुटाम् ।
त्र्ययुतंतु जपेत्पूर्वं गायत्रीसिद्धिदा ततः ॥

त्रिमधुर्वै त्रिसाहस्रं गायत्र्या जुहुयादथ ।
भूसुराणां सुराणां च भेदो नास्ति जगत्त्रये ॥

प्रथमं लक्षगायत्रीं सप्तव्याहृतिसंपुटाम् ।
ततः सर्वैर्वेदमंत्रैः सर्वसिद्धिं च विंदति ॥

होमः कार्यश्च गायत्र्या होतव्यं त्र्ययुतं मधु ।
वेदमंत्रास्ततः सम्यग्द्विजानां कामधेनवः ॥

तर्पणं चाभिषेकं च होमं विप्रांश्च भोजयेत् ।
चिंतामणिः सुरनदी कामधेनुः सुरद्रुमः ॥

भवानित्याहमंत्रार्थो ऋग्विधानेन शौनकः ।
वक्ष्येहं सूक्तमाहात्म्यं वर्गान्मंत्रांश्च शाश्वतः ॥

शृणुध्वं भूसुराः सर्वे विश्वासेन समाहिताः ।
सूक्तानां यत्फलं प्रोक्तं वर्गाणां तच्छतोत्तरं ॥

वर्गाणां यत्फलं प्रोक्तं मंत्राणां तच्छतोत्तरं ।
मंत्राणां यत्फलं प्रोक्तं पादानां तच्छतोत्तरं ॥
10 कृतादिषु जपेद्धीमान्युगादिषु यथाक्रमम् ॥

अ. अ. व.
२ ६ १३ अध्वर्यवइदंसूक्तं त्रिसहस्रं जपेज्जले ।
* इहान्यजन्मनि कृता ब्रह्महत्या प्रमुच्यते ॥

३ ४ ५ मित्रोजनेति सूक्तंवै त्र्ययुतं चशिवालये ।
लिंगं स्पृष्ट्वा जपेद्धीमान्सुरापी मुच्यते ततः ॥

प्रत्यर्पणं ततः कार्यं हिरण्यस्तेयपापकृत् ।
५ ६ १ प्रत्युसूक्तं जपेल्लक्षं बिल्वे वाश्वत्थएववा ॥

७ ८ १२ नमोमित्रस्य सूक्तं स्यादयुतं गुरुतल्पगः ।
ज्ञानतोज्ञानतोवापि मुच्यते विष्णुमन्दिरे ॥

८ ६ १ उभाउनूनंसूक्तंतु तत्संयोगी चपातकी ।
चतुर्लक्षं जपेद्धीमान्मुच्यते सर्वपातकैः ॥

७ ६ २६ परंमृत्योतुसूक्तं वै संकीर्णाद्युपपातकात् ।
योजपेल्लक्षसंख्याकं नदीसंगे विमुच्यते ॥

* अकारादिहकारान्ता जलमध्ये जपेदृचः ।
ज्ञानाज्ञानकृतं पापं महापातककं दहेत् ॥

८ १ १२ विश्वेदेवाः शास्तनेति जपेत्सूक्तं जलेपिवा ।
मुच्यते च त्रिवारंतु स्वर्णादीनांप्रतिग्रहात् ॥

सप्तजन्मकृतं पापं कृत्वाचाभक्ष्यभक्षणम् ।
१ २ ७ तद्विष्णोरित्यपां मध्ये सकृज्जप्त्वा विशुध्यति ॥

१ २ १५ अवतेहेळइति द्वाभ्यां मुच्यते सर्वकिल्बिषैः ।
20 कृतैश्चक्रियमाणैश्च करिष्यद्भिर्नसंशयः ॥

८ ३ १० जपेयुरभ्रसूक्तं तु सर्वशाखाः पठन्ति वै ।
इतिहासपुराणानि षडंगानि सदर्थकम् ॥

१ १ १ अग्निमीळे जपेत्सूक्तं पापघ्नं श्रीकरंचयत् ।
पारायणफलं तस्य वेदानां चैव सर्वशः ॥

२ ३ १४ अस्यवामस्यसूक्तंतु जपेच्चान्यत्र वाजले ।
ब्रह्महत्यादिकं दग्ध्वा विष्णुलोकंचगच्छति ॥

१ ३ २४ संपूषन्नध्वनःसूक्तं यात्राकाले जपेद्बुधाः ।
अभयेनागमिष्यन्ति सर्वकार्यं भवेत्ततः ॥

८ ६ २२ नवाउदेवाः सूक्तं तु अन्नकामोजपेद्बुधः ।
अन्नादिलभते साधु यावदस्तं समाप्नुयात् ॥

५ ५ २२ व्युषाआवोदिविजेतिप्रातःसूक्तं जपेत्सुधीः ।
हिरण्यवस्त्ररत्नानि षण्मासाल्लभते नरः ॥

८ ५ ८ याओषधीर्जपेत्सूक्तं बीजारोहणसंग्रहे ।
यदि स्पृष्ट्वा भूमिकुंभं धान्यं तस्याक्षयं भवेत् ॥

२ ८ ११ कनिक्रदज्जपेत्सूक्तं यात्राकाले प्रशस्तकम् ।
५ १ १ स्तुषेनरेतिसूक्तं तुप्रवेशेवै प्रशस्तकम् ॥

४ ८ १९ संपूषन्विदुषासूक्तं नष्टद्रव्यो जपेद्बुधः ।
पुनरायातिवै तस्य हृतंचौरादिकैर्यदि ॥

१ १ ३५ सदसस्पतिमेकर्चं मेधाकामोजपेद्व्रती ।
१ २ ७ अतोदेवेति वर्गेवै जपं कुर्यादतंद्रितः ।
30 ब्रह्माद्यैर्वंदितःपश्चाद्विष्णोःसायुज्यमाप्नुयात् ॥

७ ८ १ प्रमायुयुञ्जेसूक्तेन नश्यत्यनृतकिल्बिषम् ।
नद्यांवायुतसंख्याकं सर्पिषाग्नौ सहस्रकम् ॥

८ ४ १७ सहस्रशीर्षासूक्तं तु त्रिवारं च दिनेदिने ।
विष्णवादिसर्वदेवानां सर्वार्चनफलं लभेत् ॥

७ ५ १ पुरोजितीवः सूक्तंतु गोघ्नानां पापनाशनं ।
ग्रहणेचान्द्रसौरेवा मोक्षपर्यंतमप्सुचेत् ॥

८ ३ १० अभ्रसूक्तेन साहस्रं होमं चेल्लभते तथा ।
धर्मार्थकाममोक्षादि सर्पिर्मधुसमं पयः ।
८ ८ १ त्वंचिदादीनि सूक्तानि दशग्रंथान्यथाक्रमं ॥

तज्जपेन तदाप्नोति यत्फलं संहितादिकैः ।
मनोवाक्कायदोषाणां प्रायश्चित्तं विशोधनं ॥

२ ५ ६ पितुंन्विति जपेत्सूक्तमन्नदोषोनविद्यते ।
अन्नंस्पृष्ट्वा भुक्तिकाले वर्धतेऽन्नंच तत्कुले ॥

८ ३ ६ त्रिर्जपेत्प्रसुव:सूक्तं स्नानलोपोभवेद्यदि ।
ज्येष्ठशुद्धदशम्यांतु व्यतीपाते जले सुधी: ॥

२ २ २४ विष्णोर्नुकं जपेत्सूक्तं विष्णुभक्तिर्भविष्यति ।
ज्ञानोदयं तत: पश्चाद्विष्णुसायुज्यमाप्नुयात् ॥

२ ७ १ मन:शुध्यै जपेत्सूक्तं नर:सेमामविड्ढिवै ।
अंगारकचतुर्थ्यांतु दशवारं जलेपिवा ॥

३ ४ १ जातिसंकरदोषस्तु नतासूक्तेन शुद्ध्यति ।
40 गुरुपुष्ये यदा युक्ते हस्तार्के वाजले स्थित: ॥

२ ३ २४ एकवारं त्रिवारं वाजपेत्सूक्तं कयाशुभा ।
ससर्वजन्मसु प्राणिकृतपीडोऽपि मुच्यते ॥

तत्सूक्तेनैव जुहुयादयुतं मधुनातिलै: ।
वदन्ति पितर: प्रीतास्तेन साकं नसंशय: ॥

३ ४ २३ कृणुष्वेति जपेत्सूक्तं श्राद्धकाले प्रशस्तकम् ।
रक्षोघ्नं पितृतुष्ट्यर्थं पूर्णं भवति सर्वत: ॥

४ ३ १ प्रयुंजती जपेत्सूक्तं वाक्सिद्धिस्तु सदा भवेत् ।
सप्तम्यां रवियुक्तयां जलमध्ये यदा तदा ॥

करवीरैस्तु गायत्र्या होमं कुर्यात्सहस्रकम् ।
व्याधिनाशो भवेच्छीघ्रं मृत्युश्चैव निवर्तते ॥

अमायामिन्दुयुक्तायां कुंभमासे यदा रविः ।
५ २ ३ अग्निवस्त्रिर्जपेत्सूक्तं कायशुद्धिर्दिने दिने ॥

७ ३ १ अश्वहत्यादिदोषस्तु धर्तासूक्तेन नश्यति ।
आश्वयुज्यां नवम्यांच शक्तियुक्तेतु दैवते ॥

८ ४ १ विहिंसोतोजपेत्सूक्तं गुरुधिक्कारदोषकृत् ।
माघेवा फाल्गुनेवापि रेवत्यांभार्गवे शतं ॥

८ ४ १७ दद्यात्पुरुषसूक्तेन यःपुष्पाण्यपएवच ।
अर्चितं स्याज्जगत्सर्वं तेनवै सचराचरं ॥

४ ८ ३० इयमददादित्येतत्सूक्तं सारस्वतं द्विजः ।
50 जपेत्प्रातःशुचिर्भूत्वा वाग्मी भवति बुद्धिमान् ॥

२ ८ १३ सोमस्य माजपेत्सूक्तं शतजन्मकृतानि वै ।
मनोगतानि पापानि क्षयं यान्ति सहस्रशः ॥

५ ५ १ यद्वेति जपेत्सूक्तं वाग्दोषात्तु विमुच्यते ।
सप्तम्यां रविवारेतु माघमासेजले शतम् ॥

६ १ १ यइन्द्रेति जपेत्सूक्तं कायदोषात्प्रमुच्यते ।
जन्मान्तरसहस्रेषु मकरस्थे दिवाकरे ॥

सप्तकोटियहामंत्रैर्यत्फलं लभते नरः ।
३ ४ ११ देवस्यसवितुर्वर्गं जपंस्तत्फलमाप्नुयात् ॥

८ १ १ प्रहोतेति जपेत्सूक्तं सर्वस्तोत्रफलं लभेत् ।
८ ५ २ यासुजूर्णिर्जपेन्मन्त्रं सर्वहोमफलं लभेत् ॥

* ककारादिहकारान्तं ऽयुतं तुजपेदृचं ।
शिवस्थानेप्सुवा तत्र ऋणमोक्षोन संशयः ॥

१ २ १३ ततः कस्येति मंत्रेण जुहुयात्त्रिसहस्रकं ।
प्रियंगुत्रिमधुर्युक्तमृणनाशंतु भूतिदम् ॥

५ ४ ८ प्रातरग्नि जपेत्सूक्तं जले लक्षं शिवालये ।
कन्यार्थी लभते कन्यांलाजाहुत्या शतं हुनेत् ॥

घृतक्षीरं तु जुहुयात्तत्सूक्तेनायुतं मधु ।
जपेल्लक्षं स्त्रियं यांवै कांक्षते तां नरो लभेत् ॥

१ १ ३ वायवायाहिसूक्तेन खेचरत्वं लभेन्नरः ।
60 देवतावश्यमाप्नोति चैकवारं दिने दिने ॥

१ १ ५ अश्विनायज्वरी सूक्तं जपेद्व्याधिविनाशने ।
ज्ञानैश्वर्यप्रदं तत्र सर्वसिद्धिमवाप्नुयात् ॥

१ १ ७ सुरूपाद्यष्टसूक्तानि जपेच्चेद्विष्णुसंनिधौ ।
सर्वसिद्धिमवाप्नोति पंचवारं दिनेदिने ॥

१ १ २२ अग्निंदूताष्टसूक्तानि जपेच्चेच्छिवसंनिधौ ।
त्रिवारं चेत्त्रिवर्षेतु कार्यसिद्धिं च विन्दति ॥

१ २ १ अयंदेवायसूक्तानि त्रयोदश जपेच्छिवे ।
अरिनाशस्तंभनादि षण्मासाल्लभते चषट् ॥

१ २ २० वसिष्वसप्तसूक्तानि लक्षं विष्णोर्जपेद्यदि ।
स्तंभनादिकृतो दोषोराजार्थे वै प्रणश्यति ॥

१ ३ १ एतादिसप्तसूक्तानि जपेल्लक्षं शिवालये ।
गणेशत्वमवाप्नोति मुच्यते सर्वकिल्बिषैः ॥

२ १ १ प्रवःपान्तं जपेत्सूक्तं माघे मासि शिवालये ।
तस्यारिष्टभयं नास्ति रक्षोव्याधिखलादिभिः ॥

२ २ १ सुषुमादिसप्तसूक्तानि जपेच्चेद्विष्णुमन्दिरे ।
मार्गशीर्षेयुतं धीमान्परकायं प्रवेशयेत् ॥

७ ७ १ निवर्तध्वं जपेत्सूक्तं परकायाच्चनिर्गतः ।
कार्तिक्यांत्र्ययुतंधीमान्कीर्तिमान्विष्णुमन्दिरे ॥

७ ७ २ अग्निमीळेभुजांसूक्तं प्राणस्याकर्षणं जपेत् ।
70 सर्वेषां प्राणिनामेव शतवारं दिनेदिने ॥

५ ४ ३० प्रणवव्याहृतीनां तुत्र्ययुतं संपुटं जपेत् ।
त्रैयंबकं महामंत्रं मृत्युरेव निवर्तते ॥

३ ३ १ इन्द्रत्वादित्रिसूक्तानि जपेत्पूर्णसहस्रकं ।
अयुतं तत्र संपूर्णं शैवेवा वैष्णवेपि वा ॥

३ ८ १२ अबोध्यग्निः समित्सूक्तं पापघ्नं राजवश्यकं ।
तत्पश्चाच्छ्रीकरं लक्षं जपेन्माघे शिवालये ॥

५ ६ २५ जपेत्त्रिर्देवमंत्रंतुशिरोरोगोविनश्यति ।
आयुर्वृद्ध्यादिकं पश्चादयुतं विष्णुमन्दिरे ॥

४ ३ १ तदस्तुमित्रमंत्रेण होमं कुर्यात्सहस्रकं ।
अर्केण त्रिमधुयुक्तं शिरोरोगोविनश्यति ॥

२ ८ १ मन्दस्वेति जपेत्सूक्तं परस्त्रीपापनाशनं ।
भूतिदं चित्तशुद्धिं च लक्षं चेद्विष्णुसंनिधौ ॥

६ ४ १ त्वावतोवैसूक्तजपः क्रोधोत्थदुरितक्षयं ।
करोति शांतिदः पश्चात्त्र्ययुतं वैजलेपिवा ॥

६ २ १ वयमुत्वा जपेत्सूक्तं लोभनाशः सदा भवेत् ।
उदारत्वं ततः सत्यं लक्षंचेद्विष्णुमन्दिरे ॥

१ ७ ३३ ईळेद्यावेति सूक्तंवै जपेन्मोहस्य नाशनं ।
ज्ञानैश्वर्यप्रदं पश्चादयुतं बिल्ववृक्षके ॥

७ ५ २९ अग्नेबृहज्जपेत्सूक्तं मदनाशस्तदा भवेत् ।
40 त्र्ययुतं सर्वसिद्धिं च फाल्गुने विष्णुमन्दिरे ॥

८ ४ ५ रक्षोहणं जपेत्सूक्तं मत्सरोनास्ति सत्यतः ।
लक्षं चेद्भूतिदं तत्र जले वाश्वत्थएववा ॥

प्रमादादत्र यूपस्थोविनियुक्तोमृतः पशुः ।
२ ६ ६–७ शुद्धोनिह्नोतासेमाद्वावध्यायौत्रिर्जपेत्स्पृशन् ॥

४ ८ १७ वयमुत्वापथःसूक्तं दशवारं दिनेदिने ।
जपेच्चेदर्थवस्त्रादि राज्यं कीर्तिर्यशोभवेत् ॥

१ २ ७ इदंविष्णवादि पंचर्चं जप्त्वांगुष्ठाद्धविः स्पृशन् ।
स्पृष्टास्पृष्टं नदोषाय पितॄणामक्षयं भवेत् ॥

,, इदंविष्णवादिभिर्मंत्रैः पंचभिः श्राद्धकर्मणि ।
अंगुष्ठग्रहणं कुर्याद्राक्षसीभीर्नबाधते ॥

६ २ १ इंद्रायसामसूक्तंच श्राद्धविघ्नोयदा भवेत् ।
अज्ञादिभिर्भोजनानां श्राद्धं संपूर्णमेव हि ॥

भोजनोपक्रमात्पूर्वं प्रक्रान्तात्परतोयदि ।
श्राद्धविघ्ने पुनः कार्यो जपोहोमो न तृप्तिदः ॥

६ २ ३७ येदेवासऋचंजप्त्वाषण्मासं च दिनेदिने ।
अष्टाविंशतिमष्टौवा ऋणमोक्षोन संशयः ॥

८ ८ २० ब्रह्मणाग्निर्जपेत्सूक्तं त्रिवारं चदिनेदिने ।
नष्टार्थाऋणिनोलभ्याः षण्मासे वत्सरेपिवा ॥

८ ४ १० हविष्पान्तं जपेत्सूक्तं महापातकनाशनं ।
90 दिनेदिने त्रिवारंतु विद्या श्रीस्तत्कुलेस्थिरा ॥

८ ८ ४९ सहस्रवेदसदृशं संज्ञानं तुसकृज्जपेत् ।
नासाध्यं तेन लोकेषु शतवारं दिनेदिने ॥

सुरापादिमहापापैर्मुच्यते नात्र संशयः ।
(सुरापःस्तल्पगःस्तेयी संयोगी ब्रह्मघातकः)

८ ६ २६ इतिवाइतिसूक्तंतु त्रिर्जपेच्चेन्नपातकं ॥

८ ७ १३ नतमंहोजपेत्सूक्तंत्र्ययुतं विष्णुमंदिरे ।
भ्रातृघातात्तु पापाच्च मुच्यते नात्र संशयः ॥

७ १ १५ तरत्समन्दीसूक्तेन मार्जनं वैसहस्रकम् ।
पतिव्रतासंगदोषात्तद्वधाद्वा नलिप्यते ॥

२ ४ १ तन्नुवोचामसूक्तंवै जपेद्बिल्वेऽयुतं बुधः ।
स्वामिद्रोही महापापी तेन पापेन मुच्यते ॥

३ ८ ९ क्षेत्रस्यपतिनासूक्तं त्रिर्जपेदन्वहं बुधः ।
सुक्षेत्रं भोगयोग्यंच त्रिवर्षात्सर्वथा लभेत् ॥

८ ८ १९ मुंचामित्वाजपेत्सूक्तं श्रद्धायुक्तो दिनेदिने ।
त्रिवारंच शिवस्थाने शतायुष्यं लभेन्नरः ॥

* ऊर्ध्वरेखाप्रदधंतेविष्णुरिममिन्द्राग्नीअमृतंजुषेथां।
महांदधानाउपदीर्घमायुरस्मेधत्तंपुरुभुजापुरंधिः॥

८ ८ ११ ईंखयन्तीर्जपेत्सूक्तं लक्षं बिल्वे शिवालये ।
कुष्ठनाशोभवेच्छीघ्रं माघमासे न संशयः ॥

३ ७ १४ हंसमन्त्रं जपेद्धीमान् ह्ययुतं विष्णुमन्दिरे ।
100 अर्घ्यं दद्यात्कुष्ठरोगी सुवर्णसमतामियात् ॥

५ १ २३ अग्निनरोजपेत्सूक्तं भगिनीसंगसंभवात् ।
बिल्वे माघे लक्षसंख्यामेनसोमुच्यते तदा ॥

८ २ २३ सक्तुमिव जपेन्मंत्रं शतवारं दिनेदिने ।
लक्ष्मीश्च वर्धते नित्यमलक्ष्मीर्नहि तत्कुले ॥

८ ८ ४३ महिव्रीणां जपेत्सूक्तं लक्षं धात्र्यां तुफाल्गुने ।
सर्वं नश्यति मूढैस्तु पापं साधुषु कल्पितं ॥

८ ८ ४० बृहस्पतिर्नयतुसूक्तं जपेद्यद्ययुतं सुतः ।
पितरोदुर्मृतायस्य मुच्यन्ते सर्वपातकैः ॥

५ ४ २२ अमीवहास्वप्रसूक्तं जपेद्यस्तुशिवालये ।
अयुतं चेत्कुष्ठरोगी स्वर्णवर्णं प्रयातिच ॥

८ ८ १७ उदसौ कुक्षिशूलीतु जपेत्सूक्तं शिवालये ।
अयुतं माघमासेतु मुच्यते नात्र संशयः ॥

८ ८ १८ तीव्रस्यापि जपेत्सूक्तमपस्मारोविनश्यति ।
महापातकसंयुक्तो नीरोगी भूतले स्थितः ॥

८ ८ १६ सूर्योनोदिवःसूक्तं चप्रत्यहं प्रजपेद्दश ।
वदर्यग्रे त्रिवर्षंतु क्षयादिव्याधिनाशनं ॥११०॥

६ ६ २१ यदद्यकच्चमंत्रंवै शतवारं दिनेदिने ।
जनवश्यं राजवश्यं देववश्यं चभूतिदम् ॥

५ ७ १० माचिदन्यज्जपेत्सूक्तं पुत्र्याः संगेन दूषितः ।
110 अश्वत्थे फाल्गुने लक्षं मुच्यते सर्वकिल्बिषैः ॥

निमंत्रितोजपेद्दोग्ध्रीमासीनस्तु निषंगिणः ।
भुक्त्वांते वामदेव्यंवै श्राद्धभोजी न लिप्यते ॥

६ ४ ११ स्वादोरभक्षिसूक्तंवै श्राद्धकाले जपेद्बुधः ।
वैगुण्यं कर्तृभोक्तृणां यदि तेषां विनश्यति ॥

६ ७ १६ स्वादिष्ठयादिसूक्तानि जपेच्चेद्विष्णुसंनिधौ ।
रौद्रेवा पुण्यकालेवा सर्वसिद्धिं चविन्दति ॥

७ २ १९ प्रदेवात्यग्रेपर्यन्तमश्वत्थेवै सकृज्जपेत् ।
उत्थाने शयने शस्तं पंचपातकनाशनम् ॥

६ ७ १६ स्वादिष्ठयाग्नेपर्यंतं जपेच्चेद्विष्णुसंनिधौ ।
चैत्रे रौद्रे प्रशस्यन्तु महदैश्वर्यसंपदः ॥

३ २ २० अस्मेप्रयन्धिमंत्रंच शतवारं दिनेदिने ।
बिल्वेवा प्रजपेद्धात्र्यां बहुद्रव्यंच विन्दति ॥

२ ६ २९ अष्टोत्तरशतं मंत्रं गणानां त्वा जपेद्बुधः ।
दिनेदिने सर्वसिद्धिः सर्वविघ्ननिवारणम् ॥

६ ३ १ प्रकृतानि जपेत्सूक्तं माघमासे तुलक्षकं ।
भ्रूणबालवधानांच धात्र्यां दोषात्प्रमुच्यते ॥

२ ६ २८ त्रिकद्रुकेषु सूक्तंतु जपेल्लक्षं शिवालये ।
कन्यामनुपनीतंवा हत्वा यदि विनश्यति ॥

४ ४ १ ऋतस्येति जपेत्सूक्तं त्र्ययुतं विष्णुसान्निधौ ।
120 अश्वत्थे माघमासेच मूत्ररोगोविनश्यति ॥

८ ३ १५ अग्निः सप्तिं जपेत्सूक्तं दीक्षितानां वधोयदि ।
तस्माद्दोषान्नलिप्येत त्र्ययुतं विष्णुमन्दिरे ॥

६ ७ १३ वायोशुक्रोजपेत्सूक्तमश्वत्थे त्र्ययुतं बुधः ।
बहुधा वातरोगोऽपि विनश्यति न संशयः ॥

४ ४ २ वरुणंवो जपेत्सूक्तमयुतं धात्रिमूलके ।
तापादिव्याधिनाशस्तु सुखी पश्चात्स्थितो भुवि ॥

१ ३ २६ कद्रुद्रायजपेत्सूक्तं शीतज्वरविनाशनम् ।
लिङ्गं स्पृष्ट्वायुतं धीमान्निरोगीशीघ्रतस्तदा ॥

१ ८ ५ इमारुद्रायतवसेसूक्तं यो हरमन्दिरे ।
उष्णज्वरविनाशाय चायुतं नात्र संशयः ॥

५ ४ १३ इमारुद्रायसूक्तंतु यो जपेच्छिवमन्दिरे ।
कायशूलादिरोगघ्नमयुतं नात्र संशयः ॥

८ ३ १७ नतंविदाथमंत्रंतु जले लक्षं जपेद्यदि ।
कृष्णाजिनस्य दानस्य किल्विषं नहि विद्यते ॥

४ ५ ४ अग्नेसक्षेषत्सूक्तंतु जले लक्षं जपेद्यदि ।
बहुप्राणिवधं कुर्वन्नग्निदोषोपिशुद्धयति ॥

२ ७ १६ आतेपितर्जपेत्सूक्तं लक्षसंख्यं शिवालये ।
गरदोपिभवेत्पूतः सर्वपापैः प्रमुच्यते ॥

७ ८ १७ नतंराजानौमंत्रंच धात्र्यां लक्षं करोतिचेत् ।
130 प्रतिग्रहे कृष्णपुंसोबिल्वे वानश्यति ह्यघं ॥

८ ३ १८ यस्तेमन्यो जपेत्सूक्तमाश्वयुज्यां तुलक्षकम् ।
महिषीदानदोषात्तु मुच्यते नात्र संशयः ॥

३ ७ २७ एवापित्रे जपेन्मंत्रं मार्गशीर्षे शिवालये ।
*उभयतोमुखीदानदोषाल्लक्षं प्रमुच्यते ॥

२ ३ ८ यूपव्रस्काजपेन्मंत्रं वैशाखे विष्णुमन्दिरे ।
नरकात्प्रकृतेर्लक्षं मुच्यते दुष्प्रतिग्रहात् ॥

८ १ ३ जगृभ्माते जपेत्सूक्तं लक्षसंख्यांतु फाल्गुने ।
कुंजरस्यतु दानस्य पापान्मुच्येत वैद्विजः ॥

४ ४ २१ महेनोअद्यसूक्तं वै माघे लक्षं जपेज्जले ।
दुष्कृताद्धयदानस्य मुच्यते भूसुरोत्तमः ॥

४ ६ २५ आगावस्तुजपेत्सूक्तं ज्येष्ठेवै ऽयुतं जले ।
गोदानस्य तुयत्पापं तत्प्रणश्यति सत्यतः ॥

६ ४ ७ महिवोमहतासूक्तमयुतं निष्कृतौ जपेत् ।
वेश्यासंपर्कदोषस्तु कार्तिक्यां तुप्रणश्यति ॥

४ ४ १६ प्रतिप्रियतमंसूक्तं बदर्यां ऽयुतं जपेत् ।
वृषलीसंगदोषस्तु श्रावणेवै प्रणश्यति ॥

१ ७ २७ यदन्नवंजपेत्सूक्तं लक्षं धात्र्यांतु फाल्गुने ।
विधवासंगदोषस्तु प्रणश्यति न संशयः ॥

१ ७ २० चन्द्रमाअप्सुसूक्तंवै स्थावराणां वधेजपेत् ।
140 त्र्ययुतं बिल्वमूलेतु चैत्रे दोषोविनश्यति ॥

१ ७ २४ इन्द्रंमित्रंजपेत्सूक्तं योगिनां वैवधोयदि ।
लक्षं माघे नदीसंगे तदा पापात्प्रमुच्यते ॥

१ ७ ३ जपेत्सूक्तं यतीनां चवधे सप्रत्नथेतिच ।
लक्षं धात्र्यां ज्येष्ठमासे ततोमुच्येत किल्बिषात्॥

५ ४ १ प्रब्रह्मेति जपेन्मत्रं शतमष्टोन्तरं यदि ।
सहस्रमंत्रसदृशं किमलभ्यं जगत्त्रये ॥

८ ८ २६ वातस्यनुजपेत्सूक्तं नवश्राद्धे जले शतं ।
दोषात्प्रमुच्यते सत्यं स्वीकरोति यदातदा ॥

८ ८ २५ तुभ्येदमिन्द्रसूक्तं वैसहस्रंतु जले जपेत् ।
एकोद्दिष्टंतु योभुंक्ते तदा पापात्प्रमुच्यते ॥

८ ८ २२ अपेहिवै जपेत्सूक्तं श्राद्धे भुंक्ते तुषोडशे ।
तदा मुच्येत नरकात्रिंशद्वारं जले जपेत् ॥

८ ८ २७ मयोभूश्चजपेत्सूक्तंवृषोत्सर्गे तुरौद्रके ।
भुंक्ते यदि विनश्येत त्रिंशद्वारं जले यदा ॥

८ ८ २८ बिभ्राद्बृहज्जपेत्सूक्तं सपिंडीभोजने जले ।
प्रेतस्थाने त्रयोविंशमन्ये विंशं न किल्बिषं ॥

८ ८ २९ त्वंत्यमिटत:सूक्तंवै त्र्यूने भुंक्ते जले यदि ।
पंचत्रिंशद्विमुच्येत नरकात्सर्वथा नरः ॥

८ ८ ३० आयाहीति जपेत्सूक्तं मनस्तुष्टिं करोति तत् ।
150 दिनेंदिने पंचवारं जलस्थोविष्णुमन्दिरे ॥

१ ७ ७ सहस्रसूक्तसदृशं यो जपेज्जातवेदसं ।
बिल्वे माघे लक्षसंख्यामणिमादींश्चविन्दति ॥

५ ६ १० ध्रुवासुत्वाजपेन्मंत्रं त्र्ययुतं शृंखलो यदि ।
बंधनान्मुच्यते सत्यं नारीवापि नरोपिवा ॥

८ १ ५ अहंभुवंजपेत्सूक्तं ब्रह्मविद्यां चविंदति ।
दिनेदिने पंचवारं मूलाविद्या विनश्यति ॥

१ ७ ११ रोहिच्छ्यावाजपेद्वर्गमेकवारं दिने दिने ।
विष्ण्वालये वागोष्ठेवा गोप्रदानफलं लभेत् ॥

७ ६ ० अयंसोध्यायं त्रयोदश्यां मनीषी प्रजपेद्यदि ।
यमराजमदृष्ट्वासौ विष्णुलोके महीयते ॥

१ ७ ८ सयोवृषा जपेत्सूक्तं वंध्यालक्षं शिवालये ।
आयुष्यवंतं पुत्रं चभाग्यवंतं प्रसूयते ॥

१ ७ ५ अपनस्तु जपेत्सूक्तमस्पृश्यास्पर्शनं यदि ।
विमुच्यते तदा पापात्पंचवारं शुचिर्भवेत् ॥

१ ७ ६ वैश्वानरस्य सूक्तस्य जपस्यच फलं लभेत् ।
गुरुवाक्ये च विश्वासं पंचवारं दिनेदिने ॥

१ ७ २८ विह्यख्यंतु जपेत्सूक्तमेकवारं दिनेदिने ।
नरकघ्नं श्रीकरं चदैवभेदं नविन्दति ॥

१ ७ २५ यज्ञोदेवानां जपेत्सूक्तं त्र्ययुतं विष्णुमन्तिरे ।
160 मृतपुत्रानपत्यावा सुपुत्रं सर्वथा लभेत् ॥

१ ७ ३१ आमनीषां जपेद्वर्गं बहुकन्यांलभेद्यदि ।
सुपुत्रं लभते पश्चात् त्र्ययुतं विष्णुमन्दिरे ॥

८ ८ ३२ अभीवर्तेन सूक्तेन त्र्ययुतेन जपेन च ।
चैत्रमासे बदयंग्रे क्षुद्रदोषो विनश्यति ॥

८ ८ ३३ प्रवोग्रावाजपेत्सूक्तमयुतं विल्ववृक्षके ।
ज्येष्ठेऽभूतदया यस्य किंचिद्दोषोन विद्यते ॥

८ ८ ३४ प्रसूनवोजपेत्सूक्तं ऽयुतं तु शिवालये ।
मातृबुद्धिः सदास्त्रीषु नान्यबुद्धिः प्रवर्तते ॥

७ ८ ३ यदादीध्येजपेन्मंत्रं दशवारं दिनेदिने ।
अकाले नित्यकर्माणि कालेकाले कृतानिवै ॥

८ ७ १४ रात्रीसूक्तं जपेद्रात्रौ त्रिवारंतु दिनेदिने ।
भूतप्रेतादिचौरादिव्याघ्रादीनां चनाशनम् ॥

७ ८ ४ सभामेति जपेन्मंत्रं त्रिंशद्वारं दिनेदिने ।
कैतवेनतु यत्पापं मुच्यते तच्छिवालये ॥

७ ५ २५ नानानंवै जपेत्सूक्तमंतकाले प्रशस्तकं ।
दिनेदिने चैकवारं सर्वपापैः प्रमुच्यते ॥

७ ८ ४ त्रिपंचाशोजपेन्मंत्रं त्रिंशद्वारं दिनेदिने ।
राजप्रीतिं लभेद्रुर्वी प्रजासु प्रीतिवर्धनं ॥

७ ८ ५ अक्षैर्मेति जपेन्मंत्रं शतवारं दिनेदिने ।
170 दिव्यवस्त्रं दिव्यभोगं बहुद्रव्यं चविन्दति ॥

७ ८ ६ अवुध्रमुत्येसूक्तं तुमाघे लक्षं जपेच्छिवे ।
सर्वपापविनिर्मुक्तोदेवेन्द्रत्वं चगच्छति ॥

७ ८ ३ द्वेष्टिश्वश्रूर्जपेन्मंत्रं मार्गशीर्षे तुलक्षकं ।
स्नुषासंगमदोषेण मुच्यते विष्णुमन्दिरे ॥

७ ८ ३ अन्येजायां जपेन्मंत्रं लक्षसंख्यं शिवालये ।
परस्त्रीसंगदोषेण माघमासे विमुच्यते ॥

७ ७ १० सूक्तं द्वादशलक्षंवा इन्द्रसोममिमं जपेत् ।
अनामिक्यां संगदोषे चैत्रादौ फाल्गुनावधि ॥

५ १ ३ कन्यावल्गूजपेत्सूक्तं बदर्यां पंचक्षलकं ।
कारुस्त्रीसंगदोषेण मुच्यते नात्र संशयः ॥

६ ४ ३९ अमायां श्राद्धभोक्तावै त्वंनः पश्चाज्जपेदृचं ।
प्रतिपद्यखिलैः पापैर्मुच्यते नात्र संशयः ॥

६ ४ ४० प्रो अस्माउपसूक्तंतु जपेल्लक्षं शिवालये ।
दिवाकीर्तिस्त्रियासंगदोषान्मुच्येत वैद्विजः ॥

६ ४ ३९ प्रभंगीशू(रो)जपेन्मंत्रं लक्षसंख्यं शिवालये ।
रजस्वलासंगदोषान्मुच्यते नात्र संशयः ॥

६ ३ २८ अस्तभ्नाद्यांजपेत्सूक्तं त्र्ययुतं विष्णुमान्दिरें ।
रजकानां चनारीणां संगश्चेत्किल्बिषं नहि ॥

६ ३ २९ इमेविप्रस्यसूक्तं तुजपेत्कोटिंजले यदि ।
180 बहुस्त्रीजातिसंपर्कंदोषोनश्यत्यसंशयः ॥

५ ८ १ दूरादिहेवसूक्तंतु दशलक्षं जपेद्यदि ।
सर्वपापाविनिर्मुक्तोभूतिं भुंक्ते भुवि द्विजः ॥

६ ३ १४ अग्निनेन्द्रेण सूक्तेन त्र्ययुतेन जपेन च ।
क्षत्रियाणांच नारीणां संगदोषोनविद्यते ॥

४ २ २५ मार्गशीर्षे जपेल्लक्षं योजागारेति मंत्रकं ।
वैश्यस्त्रीसंगदोषस्तु धात्र्यां नश्यत्यसंशयः ॥

,, अग्निर्जागारमंत्रं चजपेल्लक्षं शिवालये ।
स्त्रीमात्रसंगदोषस्तु नश्यति ब्रह्मचारिणः ॥

,, सदापृणोजपेन्मंत्रं लक्षसंख्यंच फाल्गुणे ।
ब्रह्मचारीच तांबूलमश्नुते यदि नश्यति ॥

,, श्येनआसां जपेन्मंत्रमाश्वयुज्यां तुलक्षकं ।
वेदनिंदाकृतं पापं प्रणश्यति न संशयः ॥

„ सुतंभरोजपेन्मंत्रं साधुस्त्रीणां विसर्जने ।
चैत्रे लक्षं बदर्यग्रे तस्मात्पापात्प्रमुच्यते ॥

४ २ २४ यादृगेव जपेन्मंत्रं बदर्यग्रे तुलक्षकं ।
राजन्यहिंसा नरकः प्रणश्यति नसंशयः ॥

„ वेत्यग्रुर्जनिवान्मंन्त्रं लक्षं चेद्विष्णुमन्दिरे ।
राजसेवायानरकं ज्येष्ठे नश्यत्यसंशयः ॥

„ ज्यायांसमस्यमंन्त्रंतु धात्र्यां लक्षं जपेद्यदि ।
190 राजस्त्रीसंगनरकं मार्गशीर्षे विनश्यति ॥

„ समुद्रमासांमंत्रं च बदर्यां त्र्ययुतं जपेत् ।
विनश्यति तदा सत्यं वैश्यस्त्रीसंगाकिल्बिषम् ॥

„ सहिक्षत्रस्यमंत्रं चजपेच्चाश्वत्थमूलके ।
त्र्ययुतं माघमासेतु शूद्रसेवांहसःक्षयं ॥

२ ६ २७ अभिभुवेजपेन्मन्त्रं त्र्ययुतं श्रावणे यदि ।
विष्णवालये विमुच्येत पापं वैश्यस्य सेवनात् ॥

२ ७ १० दुःस्वप्ननाशने मंत्रं योमेराजश्चजपेद्यदि ।
अष्टोत्तरंतु साहस्रं ततः सुस्वप्नमेवहि ॥

१ ८ २३ अघस्वप्नस्य मंत्रं चजपेद्दु:स्वप्ननाशनं ।
अष्टोत्तरंतु साहस्रं जले वाविष्णुमन्दिरे ॥

२ ६ २७ मंत्रं जपेद्विश्वजिते लक्षं चैत्रे शिवालये ।
क्षेत्रापहारनरकं प्रणश्यति नसंशयः ॥

,, सत्रासाहोजपेन्मंत्रं लक्षं चेत्फाल्गुने जले ।
रत्नापहारनरकान्मुच्यते नात्र संशयः ॥

,, अनानुदोजपेन्मंत्रं लक्षं चेद्विष्णुमन्दिरे ।
रत्नवस्त्रं चकार्तिक्यां धनं धान्यं चवर्धते ॥

,, यज्ञेनगाजपेन्मंत्रं दशवारं दिनेदिने ।
जपेज्जलेवा बिल्वेवा बहुद्रव्यं चविन्दति ॥

,, इन्द्रश्रेष्ठानिमंत्रं चप्रत्यहं प्रजपेच्छतम् ।
200 त्रिवर्षान्तं व्रती सत्यं सहस्रं विदन्ते वसु ॥

४. ७ १० स्वादुष्किलाजपेन्मंत्रं शतवारं दिनेदिने ।
वज्रिणा सह वक्ताच मेदिन्यां कीर्तिमान्भवेत् ॥

,, अयंस्वादुर्जपेन्मंत्रं शतवारं दिनेदिने ।
राक्षसैः सह वक्ताच तेभ्योभूतिं प्रयातिसः ॥

,, अयंमेपीतमंत्रस्य जपं कुर्याच्छतं जले ।
दिनेदिने प्रवक्ताच यक्षैः सह सदा भुवि ॥

,, अयंसयोजपेन्मंत्रं शतवारं दिनेदिने ।
गंधर्वैः सह वक्ताच सौभाग्यं विन्दते भुवि ॥

,, अयंविदज्जपेन्मंत्रं शतवारं दिनेदिने ।
किन्नरैः सह वक्ताच सौन्दर्यंभुवमेतिसः ॥

४ ७ ३१ धृषत्पिबजपेन्मंत्रं शतवारं दिनेदिने ।
ब्रह्मणा सह वक्ताच ब्रह्मलोके महीयते ॥

,, इन्द्रप्रणोजपेन्मन्त्रं शतवारं दिनेदिने ।
विष्णुना सह वक्ता सविष्णुलोके महीयते ॥

,, उरुंनःप्रजपेन्मंत्रं शतवारं दिनेदिने ।
शिवेन सह वक्ता चशिवलोके महीयते ॥

,, वरिष्ठेनोजपेन्मंत्रं शतवारं दिनेदिने ।
किंपुरुषैः सह वक्ता चसुपुत्रंभूतिमेतिसः ॥

,, इन्द्रमृलजपेन्मंत्रं शतवारं दिने दिने ।
210 विन्दते सधनं धान्यं वक्ता विद्याधरैः सह ॥

४ ७ ११ मन्द्रस्यकवेर्मंत्रं चदिनं प्रति जपेच्छतं ।
अप्रियायस्य लोकेषु प्रियास्ते स्युर्जना भुवि ॥

,, अयमुशानोमंत्रं चदिनं प्रति जपेच्छतं ।
मन:शुद्धिं चवाक्शुद्धिं कायशुद्धिं चविन्दति ॥

,, नूगृणानोजपेन्मंत्रं शतवारं दिनेदिने ।
अणिमादिमहासिद्धिं लब्ध्वा लोके प्रपूज्यते ॥

४ ७ १२ इन्द्रपिबजपेन्मंत्रं शतवारं दिनेदिने ।
पितृभक्तिस्तु पुत्रस्य ह्यबुद्धिस्तु विनश्यति ॥

,, अस्यपिबजपेन्मंत्रं शतवारं दिनेदिने
भ्रातृस्नेहोवर्धतेच विस्नेहोनास्ति सर्वथा ॥

४ ७ १० दिनेदिनेष्टसाहस्त्रं जपेन्मंत्रमपादित: ।
वत्सरांते भोग्यभोगान्धनं भूमिंच विन्दति ॥

,, दूराच्चिदाजपेन्मंत्रं लक्षं माघे जले यदि ।
गृहस्थधर्मलोपस्य प्रायश्चित्तं तदेवहि ॥

,, तंवोधियाजपेन्मंत्रं लक्षं चैत्रे शिवालये ।
ब्रह्मचारी स्वधर्मस्य न्यूनंचेत्पूर्णमेव तत् ॥

,, वर्धाद्यंच जपेन्मंत्रं कार्तिक्यां विष्णुमन्दिरे ।
वानप्रस्थाश्रमे कर्मन्यूनं संपूर्णतामियात् ॥

,, एवाजज्ञानमंत्रंच जपेल्लक्षंतु फाल्गुने ।
220 नष्टक्षेत्रं नष्टधनं पुनरायाति सर्वथा ॥

४ ५ १८ समिद्धमग्निं मंत्रंच दिनं प्रति जपेच्छतं ।
मानसीदेवतापूजा लभते नात्र संशयः ॥

४ ७ १२ आयाहिशश्वन्मंत्रंच दिनं प्रति जपेच्छतं ।
वाचिकीं देवतापूजां लभते नात्र संशयः ॥

,, यदिन्द्रदिविमंत्रंच दिनं प्रति जपेच्छतं ।
कायिकीं देवतापूजां लभते नात्रसंशयः ॥

८ ७ २१ प्रोष्वस्मैतु जपेत्सूक्तं लक्षद्वादशकं जले ।
गुप्तपापं विनश्येत चैत्रादौ फाल्गुनावधि ॥

४ ७ १३ अहेलमानोमंत्रंच दिनं प्रति जपेच्छतं ।
शास्त्रेषु संशयो नास्ति विश्वासः सर्वथा भवेत् ॥

,, यातेकाकुज्जपेन्मंत्रं शतवारं दिनेदिने ।
विपरीतं नशास्त्रेषु यथार्थं दृश्यते सदा ॥

,, एषद्रप्सोजपेन्मंत्रं शतवारं दिनेदिने ।
भ्रान्तिबुद्धिर्न शास्त्रेषु यथार्थं दृश्यते सदा ॥

,, सुतःसोमोजपेन्मंत्रं शतवारं दिनेदिने ॥
अन्यार्थोनच शास्त्रेषु यथार्थत्वं चदृश्यते ॥

,, ह्वयामसि जपेन्मंत्रं शतवारं दिनेदिने ।
व्यासोक्तेच पुराणार्थे यथार्थत्वं च दृश्यते ॥

४ ७ १४ प्रत्यस्मै प्रजपेन्मंत्रं शतवारं दिनेदिने ।
230 महाकाव्येषु विश्वासमविश्वासं न सर्वथा ॥

,, एमेनं प्रजपेन्मंत्रं शतवारं दिनेदिने ।
स्मृत्यर्थेनान्यथा बुद्धिर्यथार्थं पश्यति द्विजः ॥

३ २ १२ प्रपर्वतानां सूक्तंतु जपेल्लक्षं जले यदि ।
बिल्वेवा पापनाशश्च ततोभूतिमवाप्नुयात् ॥

४ ७ १४ यदीसुतेभिर्मंत्रंच विंशद्वारं जपेद्यदि ।
अनुमासिकेषु योभुंक्ते पातकान्मुच्यते तदा ॥

३ २ ११ अहन्नहिंपरिशयानं पंचविंशज्जपेदृचं ।
न्यूनेतु मासिके भुंक्ते तस्माद्दोषान्नलिप्यते ॥

,, यज्ञोहितेजपेन्मंत्रं विंशद्वारं शिवालये ।
अब्दमोक्षंतु योभुंक्ते तदा पापात्प्रमुच्यते ॥

१ २ ७ तद्विप्रासोजपेन्मंत्रं शतवारं दिनेदिने ।
अन्तकाले महाविष्णुं स्मरेत्किंचिन्न सर्वथा ॥

,, अतोदेवाइति मंत्रं दिनंप्रति जपेच्छतं ।
वासं याति महाविष्णोर्विष्वक्सेनादिभिः सह ॥

,, इदंविष्णुर्जपेन्मंत्रं शतवारं दिनेदिने ।
जयादीनांतु संयुक्तस्ततः सारूप्यमेति सः ॥

,, त्रीणिपदाजपेन्मंत्रं शतवारं दिनेदिने ।
सान्निध्यमेति विष्णोश्च वैनतेयादिभिःसह ॥

,, विष्णोःकर्माणिमंत्रं चादिनं प्रति जपेच्छतं ।
240 सायुज्यादिमहाविष्णोर्विष्वक्सेनादिभिः सह ॥

२ ७ १९ धारावराजपेन्मंत्रं शतवारं जले यदा ।
स्वप्नेन्द्रियंच द्रवति मुच्यते पातकाद्द्विजः ॥

,, द्यावोनस्तृभिर्मंत्रं च यदा धात्र्यां शतं जपेत् ।
रेतः पतेद्भिमेदिन्यां तदा पापात्प्रमुच्यते ॥

,, उक्षंते प्रजपेन्मंत्रं शतवारं दिनेदिने ।
स्वस्त्रियामनृतौ गन्ता तस्मात्पापात्प्रमुच्यते ॥

,, पृक्षेताविश्वामंत्रंतु बदर्यां प्रजपेच्छतं ।
दिवास्वस्त्रीषु संगस्य तदा मुच्येत किल्विषात् ॥

,, इन्धन्वभिर्जपेन्मंत्रं त्र्ययुतं किल्बिषंनहि ।
रजस्वलायाभार्यायाः संगश्चेन्नात्र संशयः ॥

२ ७ २० आनोब्रह्माणिमंत्रंतु शतं दोषोजपेन्नहि ।
स्वभार्यासंगकालेतु परस्त्रीस्मरणं यदा ॥

,, तन्नोदातजपेन्मंत्रं लक्षं पापं न सर्वथा ।
प्रजावत्याः संगमश्च ज्ञानतोज्ञानतो यदा ॥

,, यद्युंजते जपेन्मंत्रं धात्र्यां पंचायुतं यदि ।
कनिष्ठभ्रातृभार्यायाः संगमे किल्बिषं नहि ॥

,, योनोमरुतोमंत्रंच बदर्यां लक्षकं जपेत् ।
दोषात्प्रमुच्यते सत्यं श्वश्रूणां संगमोयदि ॥

,, चित्रंतद्वोजपेन्मंत्रमश्वत्थे लक्षकं द्विजः ।
250 मातृष्वसुः संगदोषः प्रणश्यति न संशयः ॥

२ ७ २१ तान्वोमहोजपेन्मंत्रं शतवारं दिनेदिने ।
विन्दतेच धनं धान्यं सुकीर्तिं ब्रह्मवर्चसं ॥

,, तेदशग्वाजपेन्मंत्रं शतवारं दिनेदिने ।
अन्तकाले विष्णुतेजोलभते नात्र संशयः ॥

,, तेक्षोणीभिर्जपेन्मंत्रं त्र्ययुतं विष्णुमन्दिरे ।
यजमानस्य दानस्य चैत्रे दोषोनविद्यते ॥

,, ताँइयानोजपेन्मंत्रं जले यदि सहस्रकं ।
उत्क्रान्ते यस्यदानस्य किल्बिषं नास्ति सत्यतः ॥

,, ययारध्रं जपेन्मंत्रं सहस्रंतु शिवालये ।
गोदानस्य विमुच्येत वैतरण्याश्च किल्बिषात् ॥

४ ७ ६ संचत्वेतुजपेत्सूक्तं बदर्यां किल्बिषं नहि ।
प्रायश्चित्तं माघमासे त्र्ययुतं स्वीकरोति चेत् ॥

७ ७ ६ कुहश्रुतोजपेत्सूक्तमश्वत्थे नरकोनहि ।
ब्रह्मदंडंच गृह्णाति मार्गशीर्षे सहस्रकम् ॥

५ ४ १७ स्नायाद्याः प्रवतोजप्त्वा चेमंमेगंगइत्यपि ।
वापीकूपतटागादिनदीषु प्रार्थनंत्विदं ॥

६ ३ ४० अग्निःशुचिर्जपेन्मंत्रं शतवारं जले नहि ।
पिशाचोद्देशभुक्तानि भुंजते भूसुरास्तदा ॥

४ ७ ४ अपूर्व्याप्रजपेत्सूक्तं शतवारं दिनेदिने ।
260 विष्णवालये जले वापि क्रतूनां लभते फलं ॥

८ ३ २८ सम्राज्ञीतु जपेन्मंत्रं शतवारं दिनेदिने ।
पतिव्रता स्वभार्या सा दृष्टादृष्टप्रवर्धिनी ॥

८ ३ २३ सुकिंशुकं जपेन्मंत्रं शतवारं दिनेदिने ।
जननं मरणं नास्ति ततः सायुज्यमेतिसः ॥

८ ३ २८ इमांत्वमिन्द्रमंत्रं चदिनं प्रति जपेच्छतं ।
लभेत्पुत्रान् भाग्यवतोविदुषोदीर्घजीविनः ॥

„ समंजन्तुजपेन्मंत्रं शतवारं दिनेदिने ।
दंपत्योः प्रेममैत्रीच ज्यायसी ननिवर्तते ॥

७ २ १९ प्रदेवमच्छासूक्तंच जपेद्दश दिनेदिने ।
तद्गेहे गोधनं सत्यं धनंधान्यं चवर्धते ॥

२ १ १० दक्षिणावतामंत्रंच दिनं प्रति जपेच्छतं ।
भुवि स्थित्वा सुखं भुंक्ते परोक्षे विष्णुमाप्नुयात् ॥

८ १ ५   अहंभुवं जपेत्सूक्तमेकवारं यदा तदा ।
चौर्यवृत्त्यादिकात्पापान्मुच्यते नात्रसंशयः ॥

५ ४ २४   शुचीवस्तुजपेन्मंत्रं शतवारं दिनेदिने ।
स्पृष्टास्पृष्टं नदोषोऽस्ति शुचिर्भवति तत्क्षणात् ॥

३ १ २७   अग्निरस्मि जपेन्मंत्रं शतवारं दिनेदिने ।
नाभिंस्पृष्ट्वा भोजनान्ते दीपनं पाचनं भवेत् ॥

३ ३ २८   उषसःपूर्वासूक्तंतु जपेल्लक्षं शिवालये ।
270   दत्तभूम्यपहारश्च नदोषश्चैव फाल्गुने ॥

८ १ ३०   अधागावोजपेन्मंत्रं लक्षं बिल्वे शिवालये ।
क्षेत्रापहारनरकः प्रणश्यति न संशयः ॥

,,   अधत्वमिन्द्रमंत्रंच प्रजपेच्छतलक्षकं ।
सत्पात्रदत्तदानेन पश्चात्तापोन दोषभाक् ॥

,,   अधयद्राजानामंत्रंच त्र्ययुतं फाल्गुनेजपेत् ।
यस्मादुद्दिश्य दानंतु तस्मै दत्तंनकिल्बिषं ॥

१ ७ ५   अपनस्तुजपेन्मंत्रं सहस्रंवै जलेपिवा ।
अज्ञातिभ्योऽग्निदानंच लिप्यते नैव किल्बिषात् ॥

४ २ १९ तमुष्टुहिजपेन्मंत्रं त्रिवारं च दिने दिने ।
श्रीरुद्रस्य तु यत्पुण्यं तत्पुण्यं विन्दते जपात् ॥

८ ७ १ तदिदासजपेन्मंत्रं शतवारं दिनेदिने ।
मंत्रराजसमं सत्यं भुक्तिमुक्तिफलप्रदं ॥

,, तदिदासजपेत्सूक्तं शतवारं दिनेदिने ।
नवतिःकोटिमंत्रैश्च यत्फलं लभते हितत् ॥

१ ५ २९ इत्थाहिप्रजपेत्सूक्तं शतवारं दिनेदिने ।
सुखेन भुंक्ते स्वगृहे पुत्रपौत्रादिभिः सह ॥

२ ७ ७ सुगोहिवोजपेन्मंत्रं शतवारं दिनेदिने ।
हृद्दुःखं नाशयेत्सर्वं सुखं सर्वत्र सर्वदा ॥

,, पिपर्तुनोजपेन्मंत्रं शतवारं दिनेदिने ।
280 शत्रुभ्यश्चागतं दुःखंनस्पृशेत्सर्वथा नरः ॥

२ ६ १ विधेमते जपेन्मंत्रं शतवारं दिनेदिने ।
कुर्यादेवाविचारेण अग्निपूजां दिनंप्रति ॥

१ ६ ३० इमंस्तोममर्हतेसूक्तं जपेच्चेत्त्र्ययुतंहरौ ।
पित्रोर्विना ब्रह्मचारी वह्निदश्चेन्नपातकम् ॥

७ ८ ९ उषासानक्तासूक्तंतुजपेद्दशजलेपिवा ।
प्रमादाज्ञानतोभुंक्ते सूतकान्नं नदोषभाक् ॥

७ ८ २१ समानमुत्थं मंत्रंच सहस्रंतु यदाजपेत् ।
शूद्रान्नंज्ञानतोभुंक्ते प्रमादाद्वानकिल्बिषम् ॥

,, प्रातर्युजा जपेन्मंत्रमयुतं चेन्नपातकम् ।
रजस्वलान्नं योभुंक्ते ज्ञानतोज्ञानतोपिवा ॥

,, अध्वर्युवाजपेन्मंत्रं सहस्रं विमले जले ।
गणकान्नं नरोभुंक्त विमुच्येत सकिल्बिषात् ॥

७ ८ २२ अस्तेवसुजपेन्मंत्रं सहस्रं वैनकल्मषं ।
प्रमादाज्ञानतोभुंक्ते पतितान्नं यदा तदा ॥

,, दोहेनगां जपेन्मंत्रमयुतं चेन्न कल्मषं ।
ज्ञानतोज्ञानतोभुंक्ते पतितान्नं यदा तदा ॥

,, किमंगत्वाजपेन्मंत्रमयुतं चेज्जले सुधीः ।
ज्ञानतोज्ञानतोभुंक्ते कुष्ठयन्नं नैव कल्मषम् ॥

,, त्वांजनामजपेन्मंत्रं शतवारं शिवालये ।
290 क्षत्रियान्नं यदा भुंक्ते तदा पापात्प्रमुच्यते ॥

,, धनंनस्पंद्रंमंत्रंतु शतपंच जले जपेत् ।
भुंक्ते यदातु वैश्यान्नं तदा पापात्प्रमुच्यते ॥

७ ८ २३ यस्मिन्वयं जपेन्मंत्रं शतवारं दिनेदिने ।
सदा परान्नभोक्ताच मुच्यते तेन किल्बिषात् ॥

,, आराच्छत्रुंजपेन्मंत्रं शतवारं दिनेदिने ।
मेदिनीं कांचनं गाश्च लभते शत्रुतोनरः ॥

,, प्रथमंतश्चतुर्मंत्रान्तदा दश जले जपेत् ।
वर्णातीतान्नभोक्तासौ तस्मात्पापात्प्रमुच्यते ॥

३ ६ ५ आयात्विन्द्रोजपेत्सूक्तमेकवारं शिवालये ।
भुंक्तेभोक्ता ब्रह्मवधे विमुच्येत यदा तदा ॥

७ ८ २४ अच्छामइन्द्रं सूक्तं तदेकवारं दिनेदिने ।
विधुरान्नं यदा भुंक्ते तदा पापात्प्रमुच्यते ॥

७ ८ २८ दिवस्परिजपेत्सूक्तमेकवारं जले शुचौ ।
पर्यायान्नं यदा भुंक्ते तदा पापाद्विमुच्यते ॥

४ ३ २४ प्रवःस्पळक्रं जपेत्सूक्तं विप्रोविष्णवालये दश ।
जारिण्यन्नंच भुक्तंच तदा पापात्प्रमुच्यते ॥

,, अमादेषां जपेन्मंत्रं दशवारं शिवालये ।
उदकुंभं सदा भुंक्ते कल्मषान्मुच्यते तदा ॥

,, गवामिव जपेन्मंत्रं शतवारं शिवालये ।
300 कुंडान्नंतु यदा भुंक्ते तदा पापात्प्रमुच्यते ॥

,, कोवोमहान्ति मंत्रंच शतवारं जपेद्बुधः ।
गोलकान्नं यदा भुंक्ते तदा पापात्प्रमुच्यते ॥

,, अश्वाइव जपेन्मंत्रं दशवारं जले यदा ।
नित्यश्राद्धं यदा भुंक्ते तदा पपात्प्रमुच्यते ॥

४ ३ २४ तेअज्येष्ठाजपेन्मंत्रं दश विष्णवालये सकृत् ।
दिवा द्विर्भोजनं भुक्त्वा किल्बिषंनैव सर्वदा ॥

,, मिमातुद्यौर्जपेन्मंत्रं शतवारं शिवालये ।
भार्यायुक्तोयदा भुंक्ते तदा मुच्येत किल्बिषात् ॥

४ ३ २५ ईळेअग्निं जपेन्मंत्रं दशवारं यदा तदा ।
पंचयज्ञविहीनस्य गृहे भुंक्ते नपातकम् ॥

,, आयेतस्थुर्जपेन्मंत्रं दश वै विष्णुमंदिरे ।
हस्ते दत्तं यदा भुंक्ते तदा पापात्प्रमुच्यते ॥

,, पर्वतश्चिज्जपेन्मंत्रं शतवारं नकल्मषं ॥
यत्यन्नं तु यदा भुंक्ते पात्रस्थं प्रेरितं यदा ॥

,, वराइवेज्जपेन्मंत्रं शतवारं यदा तदा ।
बह्वश्चैकपात्रेतु भुंजते चेन्न कल्मषम् ॥

,, अज्येष्ठासोजपेन्मंत्रं दशवारं नकल्मषं ।
श्वादीनां दर्शनं कृत्वा पश्चाद्भुंक्ते यदा तदा ॥

,, यदुत्तमेजपेन्मंत्रं दशवारं यदा तदा ।
रजस्वलाध्वनिं श्रुत्वा पश्चाद्भुंक्ते नकिल्बिषं ॥

,, अग्निश्चयज्जपेन्मंत्रं दशवारं विशेषतः ।
310 अंत्यजानां ध्वनिं श्रुत्वा पश्चाद्भुंक्ते नपातकम् ॥

,, अग्नेमरुद्भिर्मंत्रंच किल्बिषं न शतं जपेत् ।
भुंजते सहपात्रेतु बह्वोब्रह्मचारिणः ॥ ३१२ ॥

४ ३ २६ केष्ठानरोजपेत्सूक्तमेकवारं प्रशस्तकं ।
मन्वादिश्राद्धभोक्ताच तदा पापात्प्रमुच्यते ॥

४ ३ ३० ऋतेनऋतं सूक्तंच एकवारं जपेद्बुधः ।
युगादिश्राद्धभोक्ताच तदा पापात्प्रमुच्यते ॥

४ ३ २३ तमुनूनं जपेन्मंत्रं दशवारं शिवालये ।
अष्टकाश्राद्धभोक्ता चतदा पापात्प्रमुच्यते ॥

„ त्वेषंगणंजपेन्मंत्रं दशवै विष्णुमन्दिरे ।
व्यतीपाते यदा भुंक्ते तदा पापात्प्रमुच्यते ॥

„ आवोयंतु जपेन्मंत्रं दशवारं विनागुरोः ।
उच्छिष्टभोजी पापेन मुच्यते सर्वथा तदा ॥

„ यूयंराजानमितिचं दशवारं जपेद्दचं ।
वृद्धिश्राद्धे यदा भुंक्ते तदा पापात्प्रमुच्यते ॥

„ अराइवेज्जपेन्मंत्रं दशवारं नसंशयः ।
सीमंतेच यदा भुंक्ते मुच्यते किल्बिषात्तदा ॥

„ यत्प्रायासिष्टमंत्रंच शतवारं शिवालये ।
अभिशस्त यदा भुंक्ते कल्मषाद्वै विमुच्यते ॥

„ प्रथिष्टयामन्मंत्रं च दशवारं शिवालये ।
320 सूत्याहनि यदा भुंक्ते तदा पापात्प्रमुच्यते ॥

„ हयेनरोजपेन्मंत्रं पंचाशाद्विष्णुमंदिरे ।
यज्ञशाले यदा भुंक्ते तदा पापात्प्रमुच्यते ॥

१ ४ ११ मंदिष्टयज्जपेन्मंत्रं शतवारं जले यदा ।
पुनर्भुवोयदा भुंक्ते तदा पपात्प्रमुच्यते ॥

,, आस्मारथंजपेन्मंत्रमयुतंचेन्न कल्मषं ।
भुक्तिकालेंत्यजं स्पृष्ट्वा ज्ञानतोज्ञानतोपिवा ॥

,, अदृदाअभींमंत्रंच सहस्रं चेन्न कल्मषं ।
शय्याप्रतिग्रही पापान्मुच्यते नात्र संशयः ॥

,, इंद्रोअश्रायिमंत्रंच अयुतं वै न दुष्कृतं ।
ज्ञानतोप्यन्यथा दृष्ट्वा भुक्तिकाले रजःस्त्रियः ॥

१ ४ १२ त्यंसुमेषंजपेन्मंत्रं दशवारं शिवालये ।
अष्टम्यांवा चतुर्दश्यां दिवा भुंक्ते नपातकम् ॥

,, सपर्वतोजपेन्मंत्रं संक्रांतौ दश चेज्जले ।
पर्वद्वये भानुवारे रात्रौ भुंक्ते नकल्मषम् ॥

,, सहिद्वरोजपेन्मंत्रं शतं चेद्विष्णुमंदिरे ।
एकादश्यामहोरात्रं भुंक्ते यदि नकल्मषम् ॥

,, आयंपृणंति मंत्रंच शतवारं नकल्मषं ।
रात्रौ भुंक्ते वत्सरेषु मन्वादिषु युगादिषु ॥

,, अभिस्त्ववृष्टिंमंत्रं च जपेद्दश नपातकम् ।
330 रात्रौ भुंक्ते वत्सरेभ्यः परान्नं भुंजते यदि ॥

१ ४ १३ परींघृणाजपेन्मंत्रं दशवारं जलेपिवा ।
श्राद्धे भुंक्ते याचितान्नं तदा पापात्प्रमुच्यते ॥

,, इदंनह्विजपेन्मंत्रं शतवारं नपातकम् ।
स्तेनभुंक्ते श्राद्धभोक्ता श्राद्धकर्ता गतस्तदा ॥

,, जघन्वाँउजपेन्मंत्रं शतवारं यदा तदा ।
याच्ञया श्राद्धकर्तासौ तदा पापात्प्रमुच्यते ॥

,, बृहत्स्वश्चंद्रंमंत्रंच सहस्रंतु जलाशये ।
अभक्त्या श्राद्धकर्तासौ तदा पापात्प्रमुच्यते ॥

,, द्यौश्चिदस्यजपेन्मंत्रं शतवारं प्रशस्तकं ।
अकाले श्राद्धकर्तासौ मुच्यते पातकात्तदा ॥

१ ४ १४ यदिन्विन्द्रजपेन्मंत्रं शतवारं नकल्मषं ।
पैतृकं दिनमुद्दिश्य त्वन्यस्मिंश्चेद्दिने कृतम् ॥

,, त्वमस्यपारेमंत्रंच जपेन्माघे युतं तदा ।
अब्दश्राद्धे यदा नूनं स्वरूपं कल्मषं नहि ॥

„ त्वंभुव:प्रजपेन्मंत्रं दशवारं जले यदा ।
मन्वादयो यदा न्यूनास्तदा पापात्प्रमुच्यते ॥

„ नयस्यद्यावा मंत्रंच शतवारं तदा जपेत् ।
युगादयोयदा न्यूना: कुरुतेवै नसंशय: ॥

„ आर्चन्नत्रजपेन्मंत्रं शतवारं जले बुध: ।
340 नित्यश्राद्धं यदान्यूनं कुरुते नात्र संशय: ॥

१ ४ १५ न्यूषुवाचं जपेन्मंत्रं शतवारं तुतद्दिने ।
अमाश्राद्धं यदा नास्ति तदा संपूर्णमेवतत् ॥

„ दुरोअश्वस्यमंत्रंच शतवारं द्विमासिके ।
महालयं यदा न्यूनं तदा संपूर्णमेवतत् ॥

„ शचीवइन्द्रजपेन्मंत्रं दशवारं दिनेदिने ।
बहुद्रव्यंचसिद्धिंच विन्दते ब्रह्मवर्चसम् ॥

„ एभिर्द्युभिर्जपेन्मंत्रं शतवारं दिनेदिने ।
अन्वष्टका यदा न्यूना संपूर्णा याति सर्वथा ॥

„ समिन्द्ररायामंत्रंतु वर्षे वर्षे जपेच्छतम् ।
आग्रयणंच यदा न्यूनं तदा संपूर्णमेवतत् ॥

५ ४ ३० मृत्युंजयार्थे गोदानं गृहीत्वा ऽयुतं जपेत् ।
ऽयाहृतीसंपुटं तारं त्र्यक्षं मृत्युं तरिष्यति ॥

१ २ ७ देवतार्थंतु गोदानं गृहीत्वानंतदोषकृत् ।
तथापि प्रजपेद्वर्गानत्तोदेवास्त्रयः शुभम् ॥

ऽयाहृतीसंपुटं तारं गायत्रीमयुतं जपेत् ।
अनडुहं प्रतिगृह्य मुच्यते कल्मषात्तदा ॥

ओष्ठापिधानामंत्रंच जपेद्दश दिनंप्रति ।
एकबुद्धिः सदा तस्य महाविष्णौ प्रवर्तते ॥

८ ६ १६ सुपर्णविप्रामंत्रंच दिनंप्रति जपेद्दश ।
350 वाग्देवी मातृका तस्य जिह्वाग्रे वर्तते सदा ॥

८ ३ १६ विश्वतश्चक्षुर्मंत्रं च दिनंप्रति जपेद्दश ।
बहुधा कल्पना बुद्धेरेकस्मिन्नात्मनि स्थिता ॥

ओष्ठमंत्रेण जुहुयाद्विद्याश्रीस्तत्कुले स्थिता ।
त्रिमधुचाष्टसाहस्रं प्रतिवर्षंतु फाल्गुने ॥

२ २ २६ तमुस्तोतारोमंत्रंच दिनंप्रति जपेद्दश ।
मूलाविद्यां नसंस्पृष्ट्वा जीवन्मुक्तोनसंशयः ॥

८ ६ १६ घर्मासमंतामंत्रंच शतं जप्त्वा यदा तदा ।
यतीच ब्रह्मचारीच मुक्तिकाले नकल्मषम् ॥

" तिस्रोवेष्ट्रायमंत्रंच प्रजपेत्प्रत्यहं शतं ।
तापत्रयं नृणां नास्ति सुखं सर्वत्र सर्वदा ॥

" चतुष्कपर्दामंत्रंच दिनं प्रति जपेच्छतं ।
द्वंद्वातीतः सुखी शांतोनिरसूयोनपेक्षकः ॥

" एकःसुपर्णोमंत्रंच दिनं प्रतिजपेद्दश ।
किंचिन्नास्ति पृथग्बुद्धिः परमात्मनि संस्थिता ॥

६ ६ ११ तंवोदस्मजपेन्मंत्रं त्रिंशद्वारं दिनेदिने ।
रागद्वेषौ तदा नस्तः चित्तशुद्धिर्भवेत्ततः ॥

५ ४ १ प्रब्रह्मैतुजपेन्मंत्रं शतवारं दिनेदिने ।
विषयेषु जुगुप्साच ब्रह्मज्ञानं भवेत्ततः ॥

१ ८ ६ मानस्तोके जपेन्मंत्रं शतवारं शिवालये ।
360 अग्निकार्यं विना भुंक्ते नपापं ब्रह्मचारिणः ॥

३ ५ ९ अग्नेमृळजपेन्मंत्रं शतवारं यदा तदा ।
औपासनं विना भुंक्ते गृहस्थस्य नकल्मषम् ॥

२ २ २६ भावामित्रोजपेन्मंत्रं शतवारं दिनेदिने ।
आधिर्नसंस्पृशेत्सत्यं विद्यया सह तिष्ठति ॥

,, य:पूर्व्यायजपेन्मंत्रं शतवारं दिनेदिने ।
जीवबुद्धि: सदा नास्ति स्वात्मन्येव स्थिरा तत: ॥

७ ५ २५ नानानंवैजपेत्सूक्तं दशवारं दिनेदिने ।
अव्दं मासं दिनं वापि नान्येषां स्वस्य वै लयम् ॥

८ १ ७ अहमत्कंजपेन्मंत्रं शतवारं दिनं प्रति ।
त्रिकालज्ञानसिद्धिंच सर्वथा विन्दते द्विज: ॥

,, अहंदांप्रजपेन्मंत्रं शतवारं दिनेदिने ।
तदा मृत्युभयं नास्ति संस्थित: परमात्मनि ॥

६ २ ३५ योत्रिंशातिजपेत्सूक्तं त्रिंशद्वारं यदा तत: ।
वैश्वदेवं विना भुंक्ते तदा पापात्प्रमुच्यते ॥

८ २ ६ कथादेवानांमंत्रंच दिनं प्रति शतं जपेत् ।
प्रारब्धसूचितं कर्म प्रणश्यति नसंशय: ॥

,, क्रतूयंतिजपेन्मंत्रं शतवारं दिनेदिने ।
आगामिकंवै प्रारब्धं प्रणश्यति नसंशय: ॥

[मूर्खोवा पंडितोवापि नारीवा देवएववा ।
370 प्रारब्धं वर्तमानंतु भोगादेव प्रणश्यति ॥]

७ ४ १६ देवाव्योनोजपेन्मंत्रं शतवारं दिनेदिने ।
यदृच्छालाभसंतुष्टोपृथिव्यां वर्तते द्विजः ॥

७ ४ १६ एवादेवजपेन्मंत्रं शतवारं दिनेदिने ।
देवतानां स्वालयस्य तृष्णानास्ति सदा सुखी ॥

५ ४ १७ या:प्रवतोजपेन्मंत्रं शतवारं यदा तदा ।
नदीमुल्लंघ्य यत्स्नानं तस्माद्दोषान्नलिप्यते ॥

२ २ २७ युवंहगर्भमंत्रंच शतवारं जले यदि ।
श्राद्धकर्ता पुनर्भुंक्ते कल्मषान्मुच्यते तदा ॥

४ २ २८ ह्योनप्रजपेत्सूक्तं सहस्रं चेज्जलेपिवा ।
प्रायश्चित्तं स्वीकरोति तदा पापात्प्रमुच्यते ॥

२ ६ १५ प्रघान्वस्यजपेत्सूक्त त्रिशतं वै नकल्मषम् ।
भूसुरेभ्योभुक्तिकाले पंक्तिभेदं करोतिचेत् ॥

२ २ २५ प्रव:पांतंजपेत्सूक्तं सहस्रं विष्णुमान्दिरे ।
कृतघ्नान्नं यदा भुंक्ते तदा पापात्प्रमुच्यते ॥

३ ३ १० शतवारंतु गायत्रीं व्याहृत्या तारसंपुटं ।
किल्बिषान्नं यदा भुंक्तेदोषोनास्ति तदा जपेत् ॥

४ ८ १ यज्ञायज्ञाजपेत्सूक्तमेकं धात्र्यां जलेपिवा ।
गणान्नंतु यदा भुंक्ते तदा पापात्प्रमुच्यते ॥

४ ८ ५ स्तुषेजनंजपेद्वर्गं शतं धात्र्यां जलेथवा ।
380 स्वामिद्रोहिगृहे भुंक्ते पातकान्मुच्यते तदा ॥

४ ८ ६ पर्जन्यवातावर्गंच शतवारं जपेद्यदि ।
मित्रद्रोहिगृहे भुंक्ते पातकान्मुच्यते तदा ॥

४ ८ ७ आयुवानस्तुवर्गंच शतवारं जले यदि ।
दीर्घरोगिगृहे भुंक्ते तदा पापात्प्रमुच्यते ॥

४ ८ ८ हुवेवोदेवींवर्गंच बदर्यां त्रिशतं जपेत् ।
पिशुनस्य गृहे भुंक्ते मुच्यते पातकात्तदा ॥

४ ८ ९ अभित्यंवीरंवर्गंच शतवारं जलेपिवा ।
असूयकगृहे भुंक्ते पापान्मुच्येत सर्वथा ॥

४ ८ १० तेनोरायोजपेन्मंत्रं शतवारं शिवालये ।
अकार्यादिगृहे भुंक्ते मुच्यते पातकात्तदा ॥

४ ८ ११ उदुत्यंप्रजपेन्मंत्रं शतवारं जले यदा ।
अकुलस्य गृहे भुंक्ते तदा पापात्प्रमुच्यते ॥

४ ८ १२ मानोवृकायवर्गंच शतं विष्ण्वालये जपेत् ।
द्वेष्यभक्तं यदा भुंक्ते तदा दोषात्प्रमुच्यते ॥

४ ८ १३ तेनइन्द्रो जपेद्वर्गं शतवारं शिवालये ।
कुंजरघ्नगृहे भुंक्ते कल्मषान्मुच्यते तदा ॥

४ ८ १४ नतद्दिवाजपेन्मंत्रं शतवारं जले यदा ।
हयघ्नस्य गृहे भुंक्ते तदा मुच्येत कल्मषात् ॥

४ ८ १५ इन्द्रोनेदिष्ठं वर्गंच शतं गोष्ठे जपेद्बुधः ।
390 गोघ्नस्य चगृहे भुंक्ते मुच्यते पातकात्तदा ॥

४ ८ १६ स्तोत्रमिंद्रोजपेद्वर्गं शतवारं जलेपिवा
कुष्ठयन्नपात्रे भुंक्तेतु तदा पापात्प्रमुच्यते ॥

४ ८ २१ एहिवांप्रजपेत्सूक्तं सहस्रं विष्णुमन्दिरे ।
ब्रह्मघ्नस्य गृहे भुंक्ते तदा मुच्येत कल्मषात् ॥

४ ८ २२ यएनंप्रजपेत्सूक्तं सहस्रं विष्णुमन्दिरे ।
पापात्प्रमुच्यते सत्यं भुंक्ते गेहे सुरापिणः ॥

४ ८ २३ इन्द्रानुप्रजपेत्सूक्तं सहस्रं चेज्जले यदा ।
स्वर्णस्तेयगृहे भुंक्ते तदा पापात्प्रमुच्यते ॥

४ ८ २४ शुक्रंतेप्रजपेत्सूक्तं शिवस्थाने सहस्रकं ।
तल्पगस्य गृहे भुंक्ते तदा पापात्प्रमुच्यते ॥

४ ८ २५ प्रनुवोचाजपेत्सूक्तं सहस्रं विष्णुमन्दिरे ।
तत्संयोगिगृहे भुंक्ते तदा मुच्येत कल्मषात् ॥

४ ८ २७ श्रथछूत्रंजपेत्सूक्तमेकवारं दिनेदिने ।
उदरं पाणिना मृज्य जीवेच्चा ह्यगदः सुखी ॥

८ १ १० महत्तदुल्वंजपेत्सूक्तं पंचवारं दिनेदिने ।
परान्नकं सदानास्ति नित्यं स्वान्ने स्थिरामतिः॥

७ ८ १३ शंनोभवेतिद्वाभ्यांतु भुक्त्वान्नं प्रयतः शुचिः ।
उदरं पाणिना स्पृष्ट्वा ज्योग्जीवेदगदः सुखी ॥

७ ४ १९ महत्तत्प्रजपेद्वर्गं पंचवारं दिनेदिने ।
औपासनं विना भुंक्ते नस्पृशेद्विधुरंततः ॥



२ ५ १० अग्नेनयजपेद्वर्गं पंचवारं दिनेदिने ।
विधुरोवा साग्निकस्य यत्फलं तत्फलं लभेत् ॥

७ ४ १६ जपेदश्वोनमंत्रंच शतवारं जले यदा ।
अश्वविक्रयिणोगेहे तस्मात्पापात्प्रमुच्यते ॥

„ शतंधाराजपेन्मंत्रं शतवारं शिवालये ।
रसविक्रयिणोगेहे भुंक्ते भोक्तुर्न कल्मषम् ॥

„ दिवोनसर्गामंत्रंच बदर्यांतु शतं जपेत् ।
उष्ट्रविक्रयिणोगेहे भुंक्ते दोषात्प्रमुच्यते ॥

७ ४ १७ प्रतेधाराजपेन्मंत्रं शतवारं यदा तदा ।
अविविक्रयिणोगेहे भुंक्ते भोक्तुर्न किल्बिषं ॥

२ १ २६ प्रसुज्येष्ठं जपेद्वर्गमेकवारं दिनेदिने ।
जनप्रिय:कीर्तिमांश्च सर्वश्रेष्ठोभुविस्थित: ॥

२ २ १ सुषुमप्रजपेत्सूक्तमेकवारं दिने दिने ।
गोधनं वर्धते सत्यं कुले तस्यतु सर्वदा ।
त्र्ययुतंचेज्जपेत्सूक्तं षण्मासाल्लभते वरं ॥

७ ५ ३२ प्रतेसूक्तेन मंत्रेण गणोनात्रिसहस्रकम् ।
ज्येष्ठां कन्यां लभेत्सत्यं लाजैश्चजुहुयान्मधु ॥

२ ८ ११ कनिक्रदज्जपेन्मंत्रं दशवारं यदा तदा ।
वेदविक्रयिणोगेहे भुंक्ते पापात्प्रमुच्यते ॥

वेदाक्षराणियावन्ति विनियुंक्तेर्थकारणात् ।
410 तावंति भ्रूणहत्पापं लभते नात्र संशयः ॥

अर्थार्थं भोजनार्थं वा योवेदाक्षरमुच्चरेत् ।
चांडालस्तु सविज्ञेयः सर्वकर्मबहिष्कृतः ॥

७ २ २० एवानःसोममंत्रंच दिनं प्रति जपेद्दश ।
स्वर्णमुक्तानि मंत्रंच वेदक्रीतं नकल्मषं ॥

७ ४ १९ महत्तत्सोममंत्रंच लक्षं चेद्विष्णुमन्दिरे ।
कन्याविक्रयदोषस्तु प्रणश्यति नसंशयः ॥

१ ४ ११ इदंनमोजपेन्मंत्रं सहस्रं चेन्न दुष्कृतं ।
ज्ञानतोज्ञानतः स्पृष्टाभुक्तिकाले रजःस्त्रियः ॥

८ ७ ११ अहंरुद्रेभिर्मंत्रंच दिनं प्रतिजपेद्दश ।
पतिव्रताक्षोभदोषान्मुच्यते सर्वथा तदा ॥

„ अहंसोममिति द्वाभ्यां प्रणश्यति नसंशयः ।
ब्रह्मक्षोभप्रजानांच दिनं प्रति जपेद्दश ॥

८ १ ७ अहंरंधयं मंत्रंच प्रणश्यति भयं विदुः ।
दिनेदिने चैकवारं जपेत्सायुष्यमेति सः ॥

८ १ ८ अहंसयोजपेद्वर्गमेकवारं दिनेदिने ।
अजपायाश्च यत्पुण्यं तत्पुण्यं विन्दते द्विजः ॥

१ ६ २४ एताउत्याजपेत्सूक्तमेकवारं शिवालये ।
आत्मस्तुत्या यदा दोष आगतश्चेत्तदा नहि ॥

१ ६ २८ अग्नीषोमाजपेद्वर्गमेकवारं दिनेदिने ।
420 परेषां निंदया जातं पातकं नहि सर्वथा ॥

८ ७ ११ अहमेवस्वयमिदं प्रत्यहं प्रजपेद्दश ।
तदा क्षोभोविनश्येतशक्तेः पौरुषदानयोः ॥

,, मयासःप्रजपेन्मंत्रं शतवारं दिनेदिने ।
ममकारोविनश्येत वर्ष्मपुत्रादिनां तथा ॥

१ ६ १९ त्वंसोमप्रजपेत्सूक्तं द्विवारं चेद्दिनेदिने ।
स्वस्तुतेः परनिंदायाजातं पापं प्रणश्यति ॥

८ ७ १२ अहमेवजपेन्मंत्रं शतवारं दिनेदिने ।
अहंकारस्ततोनास्ति मायास्पर्शोनसर्वथा ॥

८ १ १९ दिनेदिने विरोगी स्याद्वयंसोमजपेद्दश ।
आपोगृहीत्वांजलिना चक्षुषी क्षालयेत्तथा ॥

१ ६ १५ देवानां भद्रामंत्रंच जपेद्दश दिनेदिने ।
देवैश्च सहसंप्रीतिरायुर्वृद्धिर्लभेद्धनम् ॥

८ ३ २० सत्येनोत्तभितामंत्रं जपेद्बिल्वालये दश ।
उत्सवेषु यदा भुंक्ते तदा पापाद्विमुच्यते ॥

४ ८ १ यज्ञायज्ञाजपेत्सूक्तमेकवारं दिनेदिने ।
गणान्नं चैव योभुंक्ते तदा पापाद्विमुच्यते ॥

१ ६ ११ मरुतोयस्यसूक्तंतु जपेल्लक्षं शिवालये ।
जगतिप्राणिनां प्राणानभीक्ष्णंलभते गतान् ॥

८ ८ १३ अरायिकाणेसूक्तंच पंचवारं दिनेदिने ।
430 अलक्ष्मीनाशनं सत्यं कुले लक्ष्मीः प्रवर्धते ॥

८ ८ २१ अक्षीभ्यांते जपेत्सूक्तं विरोगीच सुखी भवेत् ।
व्याधिनाशं प्रकुर्वीत आशिषस्तेनचाक्षतैः ॥

वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः ।
तावन्ति हरिनामानि कीर्तितानि नसंशयः ॥

८ ८ ४२ विष्णुर्योनिमिदं सूक्तं योनिं स्पृष्ट्वा जपेद्व्रती ।
गर्भाधानं ततः कुर्यात्सुपुत्रोवै प्रजायते ॥

८ ७ २९ अग्नेअच्छाजपेत्सूक्तं दशवारं दिनेदिने ।
परिवेत्तुर्गृहे भुंक्ते मुच्यते कल्मषात्तदा ॥

८ ७ १९ अपप्राचोजपेत्सूक्तं शतवारं शिवालये ।
कल्मषं परिवित्तेश्च प्रणश्यति नसंशयः ॥

८ ७ २० ईजानमिज्जपेत्सूक्तं शतवारं जले यदि ।
किल्बिषं परिवेत्तुश्च प्रणश्यति नसंशयः ॥

८ ७ १५ ममाग्नेप्रजपेत्सूक्तमरण्ये मरणे यदि ।
पुत्रोददाति चेत्तस्य ह्ययुतं किल्बिषं नहि ॥

८ ७ १७ नासदासीज्जपेत्सूक्तं उदके मरणं यदि ।
पुत्रोददाति चेत्तस्य ह्ययुतं किल्बिषं नहि ॥

८ ७ १८ योयज्ञःप्रजपेत्सूक्तमुद्वेगान्मरणं यदि ।
पुत्रोददाति चेत्तस्य ह्ययुतं किल्बिषं नहि ॥

८ ७ २२ उभेयत्प्रजपेत्सूक्तमशक्ते मरणं यदि ।
440 पुत्रोददाति चेत्तस्य ह्ययुतं किल्बिषं नहि ॥

८ ७ २३ यस्मिन्वृक्षे जपेत्सूक्तं ह्याद्दुर्मरणं यदि ।
पुत्रोददाति चेत्तस्य ऋयुतं किल्बिषं नहि ॥

८ ७ २४ केश्यग्निं प्रजपेत्सूक्तं पाषाणान्मरणं यदि ।
पुत्रोददाति चेत्तस्य ऋयुतं किल्बिषं नहि ॥

८ ७ २५ उतदेवाजपेत्सूक्तं व्याघ्राद्दुर्मरणं यदि ।
पुत्रोददाति चेत्तस्य ऋयुतं किल्बिषं नहि ॥

८ ७ २६ तवत्यइन्द्रसूक्तंतु दुर्गे दुर्मरणं यदि ।
पुत्रोददाति चेत्तस्य ऋयुतं किल्बिषं नहि ॥

८ ७ २७ सूर्यरश्मिर्जपेसूक्तं रज्जोर्दुर्मरणं यदि ।
पुत्रोददाति चेत्तस्य ऋयुतं किल्बिषं नहि ॥

८ ७ २८ अग्ने तवजपेत्सूक्तं शस्त्राद्दुर्मरणं यदि ।
पुत्रोददाति चेत्तस्य ऋयुतं किल्बिषं नहि ॥

८ ८ १४ अग्निंहिन्वंतु वैसूक्तं मुष्टिना मरणं यदि ।
पुत्रोददाति चेत्तस्य ऋयुतं किल्बिषं नहि ॥

८ ८ १५ निधनं भ्रमतामग्नाविमासूक्तं जपेद्यदि ।
पुत्रोददाति चेत्तस्य ऋयुतं किल्बिषं नहि ॥

८ ८ ३५ पतंगं प्रजपेत्सूक्तं मंडूकान्मरणं यदि ।
पुत्रोददाति चेतस्य त्र्ययुतं किल्बिषं नहि ॥

८ ८ ३९ प्रथश्चप्रजपेत्सूक्तं धान्यमध्ये मृतं यदि ।
450 पुत्रोददाति चेत्तस्य त्र्ययुतं किल्बिषं नहि ॥

८ ८ ४० बृहस्पतिर्जपेत्सूक्त मुद्धरे त्र्ययुतं जपेत् ।
द्विजातीनां दुर्मृतानां पुत्रः कृत्वा समापयेत् ॥

प्रायश्चित्तंतु सामान्यं दुर्मृतानां मलापहं ।
नशक्यते पृथक्त्वात्तुजपेत्सूक्तं बृहस्पतिम् ॥

गायत्रीं त्र्ययुतं जप्त्वा सप्तव्याहृतिसंपुटाम् ।
दुरितं नहि तत्सर्वं दुर्मृतानां यदस्ति चेत् ॥

७ ४ ४ इषमूर्जं जपेत्पादं शतवारं दिनेदिने ।
मेदिनीवर्धनं धान्यं भुंक्ते पुत्रादिभिः सह ॥

५ १ २६ यूयंपातजपेत्पादं शतवारं दिनेदिने ।
सदा सुखं सदाभद्रं मान्यतां विन्दते सदा ॥

८ २ १ प्रतिगृभ्णीतपादंच शतवारं दिनेदिने ।
दुर्बुद्धिः सर्वदा नास्ति सुबुद्धिर्वर्धते सदा ॥

८ ३ ५ वसूनांवाजपेत्पादं शतवारं दिनेदिने ।
द्यावापृथिव्योरैश्वर्यं वुध्यायज्ञैश्च विन्दते ॥

„ अर्वन्तोवाजपेत्पादं शतवारं दिनेदिने ।
धनवांश्च भुवि स्थित्वा प्रजावांश्च यशोलभेत् ॥

„ वनुंवायेजपेत्पादं शतवारं दिनेदिने ।
स्वर्देवास्तेन संतुष्टाबहुश्रेयांसि कुर्वते ॥

८ ४ ३० तेसोमादोजपेन्मंत्रं शतवारं दिनेदिने ।
460 सुखं स्वर्गमवाप्नोति कल्पपर्यंतसंस्थितः ॥

„ वृषावोअंशुर्मंत्रंच प्रत्यहं प्रजपेद्दश ।
बहुक्षेत्रं बहुद्रव्यं भुनक्तिबहुभिः सदा ॥

६ २ ९ ईळिष्वाहिजपेन्मंत्रं त्र्ययुतं विष्णुमंदिरे ।
भगंदरात्प्रमुच्येत जलेवा भूतिदं नृणाम् ॥

„ दामानं प्रजपेन्मंत्रं त्र्ययुतं बिल्वमूलके ।
अतिसारात्प्रमुच्येत जीवेच्चेत्सद्मसंस्थितः ॥

„ येषामाबाधमंत्रंच जपेच्चेत्त्र्ययुतं जले ।
बालग्रहानपीड्यंते भूतप्रेतादयस्तथा ॥

,, उदस्यशोचिर्मंत्रंच जपेच्चेद्विष्णुमंदिरे ।
वृकज्येष्ठाविनश्येत प्रत्यहं फाल्गुने जले ॥

८ ८ ३७ उत्तिष्ठप्रजपेन्मंत्रं बदर्यां ह्ययुतं यदि ।
द्रुष्येरितं नष्टकार्यं सर्वथा नस्पृशेत्तदा ॥

२ ६ १० विश्वानिदेवमंत्रंच (पादंच) प्रत्यहं प्रजपेद्दश ।
सर्वारिष्टविनाशंच सर्वाभीष्टप्रदायितत् ॥

३ ८ १९ वधेनदस्युं मंत्रंच दिनं प्रति जपेद्दश ।
शत्रुनाशोव्याधिनाशोमृत्युनाशस्तु भूतिदः ॥

८ ८ ४८ अघमर्षणसूक्तंवै ऋतंच प्रजपेज्जले ।
महापातकनिर्मुक्तोभूतिदस्तु दिनेदिने ॥

३ ५ २० नृष्टुतः प्रजपेन्मंत्रं लक्षं चेद्विष्णुमन्दिरे ।
470 त्रिंशतं वैष्णवं कृत्वा प्राजापत्यसमं विदुः ॥

३ २ ४ शुनंहुवेममंत्रंच लक्षं चेत्प्रजपेज्जले ।
षष्टीनां त्रिंशतं सत्यं तीर्थकृच्छ्रसमं विदुः ॥

२ ६ ६ नूनंसातेजपेन्मंत्रं माघमासेतु लक्षकं ।
षष्टीनां त्रिंशतं कृच्छ्रं मंत्रकृच्छ्रसमं विदुः ॥

६ ५ २१ विशोविशोजपेन्मंत्रं धात्र्यांच त्रिशतं जले ।
स्त्रीणां नृणां चपापघ्नं चांद्रायणसमं भवेत् ॥

७ ७ २९ प्रवोच्छारिरिचेमंत्रं वदर्यां लक्षकं जपेत् ।
कृच्छ्रं सांतपनं सत्यं महापातकनाशनं ॥

१ ६ २२ आप्यायस्व जपेन्मंत्रं दशलक्षं शिवालये ।
चंद्रग्रहे यदा भुंक्ते तदा पापात्प्रमुच्यते ॥

८ ८ १६ सूर्योनोदिवजपेन्मंत्रं दशलक्षं जलेपिवा ।
सूर्यग्रहे यदा भुंक्ते तदा पापात्प्रमुच्यते ॥

एकोद्दिष्टे ब्रह्मचारी जलेवा किल्बिषं नहि ।
१ ७ ३७ पादं भुंक्ते लक्षसंख्यां प्रजपेद्द्युभिरक्तुभिः ॥

,, अरिष्टेभिर्जपेत्पादं षोडशे भोजयेद्यदि ।
पंचायुतं ब्रह्मचारी मुच्यते कल्मषात्ततः ॥

,, तन्नोमित्रोजपेत्पादं वृषोत्सर्गेच भोजने ।
शिवालये ब्रह्मचारी ऽयथुतं चेन्न दुष्कृतम् ॥

४ १ २ अग्नओजिष्ठं पादंच ऽयूने भुंक्ते जपेद्यदि ।
480 अयुतं चेद्ब्रह्मचारी तदा पापात्प्रमुच्यते ॥